पुनःपुनश्च संस्मृत्य संस्मृत्य स्मृत्वा स्मृत्वा हृष्यामि। धन्योऽहं धन्योऽहं कृतकृत्योऽहमिति संतोषसागरे मज्जामीत्यर्थः ॥ ७७ ॥

किमतः परं वक्तव्यमस्ति मम निश्चयं शृण्वित्याह—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाऽष्टादशोऽध्यायः ॥ १८ ॥

**यत्रेति**। योगेश्वरः योगास्तेजोबलपौरुषविद्याराज्यजयधनधान्यपुत्रपौत्राद्यभ्युदयानां घटनास्तेषामीश्वरः। यद्वा 'विद्याविद्ये ईशते यस्तु सोऽन्यः' इति श्रवणात् युज्यते आभ्यामिति योगौ विद्याविद्ये ईशितुं शीलमस्यास्तीति योगेश्वरः। यद्वा युज्यते समाधीयते चित्तमेतेष्विति योगाः ऐहिकामुष्मिकसुखविशेषाः कर्मसाध्या उपास्तिसाध्याश्च तेषां प्रदाने शक्त ईश्वरो योगेश्वरः। यद्वा योगो ज्ञानयोगः कर्मयोगो वा तयोः फलसिद्धेरीश्वराधीनत्वाद्योगेश्वरः 'संसारमोक्षस्थितिबन्धहेतुः' इति श्रुतेः। एवंलक्षणः परमात्मा श्रीकृष्णो यत्र यस्मिन् पक्षे तिष्ठति धनुर्धरो धनुर्विद्यापारगोऽतिरथो गाण्डीवधन्वार्जुनः यत्र यस्मिन् पक्षे तिष्ठति, तत्र तस्मिन् पक्ष एव ध्रुवा अव्यभिचारिणी नीतिः शास्त्रदृष्टा मर्यादा तिष्ठति। धर्मस्तत्रैव तिष्ठतीत्यर्थः। 'यतो धर्मस्ततो जयः' इति न्यायेन विजयोपि तत्रैव तिष्ठतीत्यर्थः। श्रीर्ध्रुवा निश्चला राज्यलक्ष्मीस्तत्रैव तिष्ठति। भूतिर्गजतुरगधनधान्यादिसंपत्तिस्तत्र तस्मिन्नेव पक्षे ध्रुवा निश्चला तिष्ठतीति मम मतिर्निश्चयः। त्वमतः पुत्राणां जयाशां परित्यजेत्यर्थः। गुरुभ्रात्रादिहिंसालक्षणं घोरं कर्माहं कृत्वा पापी स्यां, तेन नरकं यास्यामीत्यनात्मकर्तृके कर्मण्यकर्तारमेवात्मानं कर्तारं भोक्तारं मत्वा मोहेन शोचतोऽर्जुनस्य मोहसागरे निमग्नस्योद्धरणमात्मयाथात्म्यविज्ञानेन विना नान्येन, सिध्यत्यात्मयाथात्म्यविज्ञानं च तत्त्वंपदार्थयोः शोधितयोरेकत्वप्रतिपादनेन विना न सिध्यत्यतस्तयोः शोधनं कर्तव्यमिति। 'नत्वेवाहं जातु नासम्' इत्यारभ्य प्रथमषट्केण त्वंपदार्थं शोधयित्वा, द्वितीयेन तत्पदार्थं च शोधयित्वा, तृतीयेन तयोरेकत्वं प्रतिपाद्य कर्तृत्वभोक्तृत्वाद्यविद्यातत्कार्यसंबन्धरहितं सर्वसंसारधर्मनिर्मुक्तमात्मतत्त्वं बोधयित्वा तस्यैव बोधस्याप्रतिबन्धत्वसिद्धये ज्ञाननिष्ठामुपदिश्य तत्परिपक्वज्ञानेन 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इत्यात्मयाथात्म्यावधारणं तेन ब्रह्मप्राप्तिश्च प्रतिपादिता, ततः

सर्वस्या अपि गीतायाः प्रतिपाद्यं प्रत्यगभिन्नं परं ब्रह्मैव तज्ज्ञानमेव मोक्षसाधनमिति पर्यवसितम् । तथैव सर्वस्या अपि गीतायाः श्रवणं कृतवतोऽर्जुनस्योक्तिरप्यनुभवारूढा 'नष्टो मोहः स्मृतिर्लब्धा' इति ज्ञानेनाज्ञाननिवृत्तिं तत्फलभूतमात्मलाभं च बोधयति । अतः सिद्धं ज्ञानमेव मोक्षस्य परमकारणमिति । तथाच श्रुतिः 'ज्ञानादेव तु कैवल्यं' 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति 'एषा तेऽभिहिता सांख्ये' इति ज्ञानयोगमुपदिश्य स्वेनोपदिष्टज्ञानसंपादने पुरुषस्य प्रज्ञामान्द्यमालक्ष्य 'बुद्धिर्योगे त्विमां शृणु' इति कर्मयोगमुपक्रम्य 'बुद्धौ शरणमन्विच्छ 'योगः कर्मसु कौशलम्' इति ज्ञानयोगं च पुनः प्रस्तुत्य 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति तयोर्विषयभेदव्यवस्थां कृत्वा राजसतामसत्यागनिन्दापूर्वकं सात्विकत्यागस्यैव श्रेष्ठत्वमुक्त्वा तत्रापि परमेश्वरप्रीत्यै कर्तव्यमिति निश्चित्य कर्मनिष्ठया परिशुद्धचित्तस्य ज्ञानं प्राप्तवतो ज्ञाननिष्ठा विहिता । ततः कर्मयोगो ज्ञानयोगस्य साधनमेव भवति नतु साक्षान्मोक्षकारणमित्येव सिद्धान्तितं भवति । अत्र गीताया ज्ञानकर्मयोगयोरेव द्वयोरुपक्रमोपसंहारदर्शनाद्योगान्तरस्य न प्राधान्यं प्रतीयते अमानित्वाद्वेष्टृत्वशुद्धबुद्धित्वादयो यथाज्ञानतत्फलसिद्धिसाधनानि तथा मुमुक्षुत्वनिष्ठावत्त्वसात्विकश्रद्धाभक्तिमत्त्वादयः कर्मफलसिद्धिसाधनानीति सिद्धं सर्वमनवद्यम् ॥ ७८ ॥

कालकूटसमो दोषो यस्य कण्ठे लवायते ।  
गुणोऽपि वा कलामात्रो यस्य भूषायते सतः ।  
तमहं पुरुषं वन्देऽविद्यादोषहरं परम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीभगवत्पादपूज्यशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यामष्टादशोऽध्यायः ॥ १८ ॥

ॐ तत्सत् ।

---

# श्रीमद्भगवद्गीतापद्यानामकारादिवर्णक्रमः ।

## द

**समाप्तोऽयं गीतापद्यानामकारादिवर्णक्रमः।**

मू० डा.व्य.

स... —इयं कवचार्गलाकीलकरहस्यत्रयसंपुटितास्ति। इयं लघ्वक्षरायामविस्ताराप्यतिमनोहरा कौशेयपट्टबद्धा चिक्कणपत्रैर्नूतनाभिनवाक्षरैश्चाङ्किता. ... ... ... ... ०=॥ ०॥

**समयोचितपद्यमालिका**—प्रासङ्गिकश्लोकचरणान्तःपातिश्लोकानां संग्रहः.... ... ... ... ... ... ।= ०-

**सारस्वतव्याकरणं पूर्वार्धम्**—वस्त्रबद्धम्. ... ... ... ।- ०-

**सारस्वतव्याकरणं पूर्वार्धम्**—पत्रमात्रबद्धम्. ... ... । ०॥

**सारस्वतव्याकरणं वृत्तित्रयात्मकम्**—इदं पुस्तकं प्रथमं हस्तलिखितपुस्तकान्येकीकृत्य संशोधय्य च मुद्रितम्। केवलं वस्त्रबद्धपुस्तकस्य. ... ... ... ... ।॥। ०=

**सारस्वतव्याकरणम्**—तिस्रोऽपि वृत्तयः—पत्रमात्रबद्धम् ।= ०-॥

**सारस्वतव्याकरणम्**—चन्द्रकीर्तिप्रणीतव्याख्यासहितम् ( वृत्तित्रयात्मकम्. ) ... ... ... ... ... २॥ ।

**सारस्वतव्याकरणम्**—चन्द्रकीर्तिव्याख्यासहितम्। **पूर्वार्धं.** १ ०=

**सारस्वतव्याकरणम्**—चन्द्रकीर्तिव्याख्यासहितम्। **उत्तरार्धं.** १॥ ।

**सारस्वतपूर्वपक्षावलिः.** ... ... ... ... ... ०=॥ ०॥

**सारावलिः**—कल्याणवर्मविरचिता। ... ... ... १। ०=

**साहित्यसारम्**—अच्युतरायकृतम्—स्वकृतसरसामोदाख्यव्याख्यासहितम्। ... ... ... ... ... ... २॥ ।

**साहित्यदर्पणः**—विश्वनाथकविराजप्रणीतः. श्रीरामचरणतर्कवागीशभट्टाचार्यकृतया टीकया समेतः. ... ... ... ३ ।

**सिद्धान्तकौमुदी**—तत्त्वबोधिनीसमाख्यव्याख्यासंवलिता. ... ४ ।॥।

**सुन्दरकाण्डम्**—वाल्मीकिरामायणान्तर्गतं मूलमात्रं नित्यपाठयोग्यं कौशेयपट्टबद्धम्. ... ... ... ... ... ।॥। ०=

**सुभाषितरत्नभाण्डागारम्....** ... ... ... ... ३॥ ।=

**सुभाषितत्रिशती**—अर्थात् भर्तृहरिशतकत्रयम्—श्रीरामचन्द्रबुधेन्द्रविरचितया सहृदयानन्दिन्याख्यया व्याख्यया समेता. ।॥। ०-

**स्मृतिकौस्तुभः**—श्रीमदनंतदेवभट्टप्रणीतः.... ... ... २ ।

**हर्षचरितम्**—बाणभट्टकृतं, शंकरकृतसंकेतटीकया सहितम्... २ ०=

**हितोपदेशः**—आङ्ग्लटिप्पणीसहितः. ... ... ... ... १ ०-॥

**हिरण्यकेशीयब्रह्मकर्मसमुच्चयः**—(विषया. ३८८) ... २। ।=

**तुकाराम जावजी,**

निर्णयसागराख्यमुद्रणयन्त्रालयाध्यक्षः, मुंबई.